

बोधपञ्चदशिका and परमार्थचर्चा of अभिनवगुप्त - with the Commentary विवरण of Pt. हरभट्ट शास्त्री - Edited by Pt. जगद्धर जाडू.

(Kashmir Series of Text and Studies No. 76, 77),

Srinagar, 1947.

1347

10

Philosophy / कश्मीर Series

THE KASHMIR SERIES OF TEXTS AND STUDIES

*Nos.* 76-77

# BODHAPANCHADASHIKA

AND

# PARAMARTHA-CHARCHA

WITH THE VIVARANA

BY

*Pt. Hara Bhatta Shastri*

EDITED BY

*Pt. Jagaddhara Zadoo Shastri M. A., M. O. L.,*



Under the authority of

THE JAMMU & KASHMIR GOVERNMENT.




**Published by**

*The Research and Publication Department,*

JAMMU AND KASHMIR GOVERNMENT,

Srinagar, Kashmir.









*Printed at the:*

KRISHNA PRINTING PRESS SRINAGAR

*Published by:*

PANDIT JAGADDHAR ZADOO SHASTRI
M. A., M. O. L., H.H.

*for the Research Department,*

Jammu & Kashmir Government,

SRINAGAR.



कश्मीरसंस्कृतग्रन्थावलिः

ग्रन्थाङ्काः—७६, ७७,

# बोधपञ्चदशिका ।

# परमार्थचर्चा ।

पं० हरभट्टशास्त्रिकृतविवरणोपेते ।

श्रीराजराजेश्वर—महाराजाधिराज—कश्मीरनरेन्द्र

श्रीहरिसिंहजी—बहादुराज्ञया

रिसर्चकार्याध्यक्ष—पण्डितजगद्धरजाडू—शास्त्रिणा

कार्यालयस्थेतरसंपादकपण्डितसहायेन

संशोधनादिसंस्करणोत्तरं संपाद्य

श्रीनगरे 'कृष्णा प्रेस' मुद्रणालये मुद्रापयित्वा प्रकाश्यमुपनीते ।



कश्मीर—श्रीनगर ।

संवत २००४ ईस्वी १९४७



श्रीसोमानन्दनाथप्रभृतिगुरुवरादिष्टसन्नीतिमार्गो
लब्ध्वा तत्रैव सम्यक्पटिमनि घटनामीश्वराद्वैतवादः ।
कश्मीरेभ्यः प्रसृत्य प्रकटपरिमलो रञ्जयन् सर्वदेश्यान्—
देशेऽन्यस्मिन्नदृष्टो घुसृणविसरवत्सर्ववन्द्यत्वमाप ॥१॥

तरत सहसा संसाराब्धिं विशत्त परे पदे
पदमविचलं नित्यालोकप्रमोदसुनिर्भरे ।
विमृशत शिवादिष्टाद्वैतावबोधसुधारसं
प्रसभविलसत्सद्युक्त्यान्तः समुत्प्लवदायिनम् ॥२॥





# श्रीबोधपञ्चदशिका

## महामाहेश्वराचार्याभिनवगुप्तपादविरचिता ।



श्रीगणेशाय नमः ॥ श्रीशारदाम्बायै नमः ॥ इह खलु शिवाद्वयशासनाम्भोधिपारदृश्वा श्रीमान महामाहेश्वरोऽभिनवगुप्ताख्य आचार्यवरोऽतितीक्ष्णप्रतिभाप्रसादातिशयतोऽवगाहनीयेषु शैवागमेषु केषाञ्चिदनुग्राह्याणां शिष्याणां मतिसौकुमार्यं पर्यालोच्यानायासमेव त्रिकशास्त्रसंप्रदायजिज्ञासूंस्तानुपदिदिक्षुः पञ्चदशभिः श्लोकैस्तत्प्रतिबोधनाय शास्त्रार्थमुपनिबध्नाति । तत्रादौ नित्योदितसंवित्प्रकाशस्यावभासने प्रमाणव्यापाराभाव इति प्रतिपादयन्नाह--

**अनस्तमितभारूपस्तेजसां तमसामपि ।**
**य एकोऽन्तर्यदन्तश्च तेजांसि च तमांसि च ॥१॥**

स्वतन्त्रशिवप्रकाशो हि सर्वाभासकः सदोदितो न स्वं प्रकाशयितुं प्रकाशान्तरमपेक्षते स्वप्रकाशत्वात्, तस्याऽस्तोदितत्वाभावात्, "सकृद्विभातोऽयमात्मा" इति, "नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्" इति श्रुतेः, । (बृ० आ० ४ । ३ । २३) य एकोऽद्वितीयोऽर्कादीनां तेजसां प्रमाणादिप्रकाशानां च तथा, मदमूर्छाद्यवस्थारूपाणां तमसां बाह्यप्रकाशानामन्तरवस्थितत्वात् तदनुप्राणको बहिरपि तस्यैव संवित्प्रकाशस्य सत्त्वात्तदन्तरेव

तान्यर्कादीनां तेजस्तमांसि स्वसत्तामुपयान्ति । नहि भारूपं संवित्प्रकाशं विना किमपि घटादि भावजातं प्रकाशमानतामेति, ते च प्रकाशा अस्तं यान्ति उदयन्ति च । प्रकाशः पुनरस्तोदयानाकलितः प्रमाणानामपि जीवितरूपं मूलप्रमाणं तमर्कादिप्रकाशः कश्चिदवभासयितुं न शक्नोति तस्य प्रकाश्यत्वात् स्वाभासनेऽप्यसमर्थस्य कथं परं भासयितुं प्रागल्भ्यं, प्रत्युत स्वाभासनेऽपि संवित्प्रकाशमेवापेक्षते स इति स्वप्रकाशत्वादर्कादीनां स एव भासकः । यदुक्तम्-

'यत्र सूर्यो नवा सोमो नाग्निर्भासयतेऽपि च ॥

नचार्कसोमवह्नीनां तत्प्रकाशाद्विना महः ॥

किमप्यस्ति निजं किन्तु संविदित्थं प्रकाशते'। (तं० ३ । ११५)

इति । तथा गीतासु-

'न तद्भासयते सूर्यो न शशाङ्को न पावकः ।

यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥' (भ० गी० १५ । ६)

अबोधोऽपि न बोध्यमानो बोधाद्भिद्यतेऽन्यथा तत्सत्त्वानुपपत्तेरिति स्थित्या खपुष्पादेरप्यसतो व्यापकत्वादपरिच्छिन्नः संवित्प्रकाशो विश्वत्र निर्निरोधावरणं तत्तद्वैचित्र्यात्मना विजृम्भते इत्येतेन किमपि प्रमाणादि, तत्र सर्वजीवितभूनोपयुज्यते इत्युक्तं भवति ॥ १ ॥

एवं संवित्प्रकाशः प्रकाश्यं प्रमेयं प्रकाशयतीति प्रकाशप्रकाशनीयभावे सिद्धे कथं शिवाद्वयभाव इत्याशंक्याह-

**स एव सर्वभूतानां स्वभावः परमेश्वरः ।**
**भावजातं हि तस्यैव शक्तिरीश्वरतामयी ॥२॥**

स एव परमेश्वरः स्वतन्त्रचिद्घनतापरमार्थः सर्वभूतानां समग्राणां शिवादिसकलान्तानां प्रमातृवर्गाणां सकलानां प्रमेयवर्गाणां च उभयेषां ग्राह्यग्राहकरूपाणां स्फुरत्तात्मानुत्तरप्रकाशवपुः स्वभावोऽन्यथा

"यत्तत्र नहि विश्रान्तं तन्नभः कुसुमायते । (तं० ८।३)

इतिस्थित्या संवित्प्रकाशाद्भिन्नस्याऽसत्त्वान्न किमपि प्रकाशेत । एतदेव हि पारमेश्वर्यमनन्यापेक्षं स्वातन्त्र्यं, यत्तत्तदनियतविश्ववैचित्र्येण स्वेच्छयैव स्वात्मभित्तौ समुन्मीलनं, तत्रापि नियताकारधारित्वे ऐश्वर्यं विघटेत । यदुक्तमाचार्येणैव

'अस्थास्यदेकरूपेण वपुषा चेन्महेश्वरः ।
महेश्वरत्वं संवित्त्वं तदत्यक्ष्यद्घटादिवत् ॥' (तं० ३।१००)

केवलं वेद्यवेदकत्वरूपस्य व्यवहारस्य मायाभूमौ कल्पितप्रमात्रपेक्षया तात्कालिकी व्यवह्रियमाणता । यदुक्तमीश्वरप्रत्यभिज्ञायाम्

'केवलं भिन्नसंवेद्यदेशकालानुरोधतः ।
ज्ञानस्मृत्यवसायादिव्यवहारोऽनुभूयते' ॥ (ई० प्र० १।५।२१)

इति । वस्तुतस्तु सदैवाभिन्नप्रकाशमयोऽनुत्तरानाख्येयसंवित्स्वभावः परमेश्वर एव स्वात्मोच्छलत्तया तत्तद्विश्वभावपरिस्फुरणेन चकास्तीत्यर्थः । एतदेव हेतुद्वारा स्पष्टं निरूपयन्नाह भावजातमिति, तस्यैव परमेश्वरस्य हि यस्मादीश्वरतामयी शक्तिरैश्वर्यरूपं स्वातन्त्र्यमेव वाच्यवाचकात्मविश्वपदार्थमयं भावजातं भवति, यदुक्तं मङ्गलायाम्

'शक्तयोऽस्य जगत्कृत्स्नं शक्तिमांस्तु महेश्वरः।'

इतिनीत्या स्वातन्त्र्यमेव जगदात्मना प्रथते इत्यर्थः । यदुक्तम्

'बोधो हि बोधरूपत्वादन्तर्नानाकृतीः स्थिताः ।
बहिराभासयत्येव द्राक् सामान्यविशेषतः ॥'(तं० १।२५७)

इति । तथेश्वरप्रत्यभिज्ञायाम्

'चिदात्मैव हि देवोऽन्तः स्थितमिच्छावशाद्बहिः ।
योगीव निरुपादानमर्थजातं प्रकाशयेत् ॥ ई० प्र० (१।५।७)

इति । अतश्च स्वैश्वर्यनिर्भरः शिव एवैकस्तथा तथा प्रस्फुरति इत्येकैव संवित्पर-मार्थसतीति भावः ॥२॥

नन्वेवं परमेश्वरस्य शक्तयं विश्वमिति शक्तिमद्वतोः परस्परं धर्मधर्मिभावेन भेदात् कथमेकशिवात्मभाव इत्याशंक्याह

**शक्तिश्च शक्तिमद्रूपाद् व्यतिरेकं न वाञ्छति ।**

**तादात्म्यमनयोर्नित्यं वह्निदाहिकयोरिव ॥३॥**

यथाग्नेस्तच्छक्तेश्च दाहकत्वपाचकत्वप्रकाशकत्वादिविलक्षणाया अनयोरयुतसि-द्धत्वात्सातत्येन समवेतयोरैकात्म्यमेव न कदाचिद् दाहिकादिस्तच्छक्तिः स्वाश्रयं वह्निमनादृत्य स्वरूपसत्तां लभते, 'यद्येन विना न तिष्ठेत् तत्तस्मान्न व्यतिरिच्यते' इति न्यायादभिन्नसारूप्यात् तादात्म्यमेवावलम्बते । यदुक्तम्

'मातृक्लृप्ते हि भावस्य तत्र तत्र वपुष्यलम् ।

को भेदो वस्तुतो वह्नेर्दग्धृपक्तृत्वयोरिव ॥' (तं० १।७०)

इति । एवं विश्वभाववैचित्र्यप्रथामयी स्वातन्त्र्यशक्तिः शक्तिमल्लक्षणात् शिवस्वभावान्न व्यतिरेकमिच्छेत् तत्सत्वे हि तस्याः स्वरूपविप्रलोपात् स्वरूपविनाशे कार्यसंपाद-नशक्तेरनुपपद्यमानत्वाद्विश्वमिदं न प्रस्फुरेत् प्रस्फुरति च विश्वं तस्माच्छिव-प्रकाशाभिन्ना स्वातन्त्र्यशक्तिरेव वेद्यवेदकरूपेण विस्फुरति इत्यमुनैवाशयेन शिवसूत्रेषु 'चैतन्यमात्मा' इति भावप्राधान्येन निर्देशः । नापि क्रियाभेदात् क्रियावान् भिद्यते तास्वनवरतं प्रवर्तमानास्वपि कर्तुरेकत्वानपायात् । एवं शक्तीनां बहुत्वेऽपि शक्तिमानेकत्वं न व्यभिचरति, तद्बहुत्वस्यापि एकस्यामेव स्वातन्त्र्यशक्तावन्त-र्भावान्मुख्या सैव एका शक्तिशक्तिमदव्यतिरेकिणी सर्वत्राभिषिच्यते । यदुक्तम्

'तस्मात्संवित्त्वमेवैतत्स्वातन्त्र्यं यत्तदप्यलम् ।

विविच्यमानं बह्वीषु पर्यवस्यति शक्तिषु ॥' (तं०१।६१)

इति । तथा

'बहुशक्तित्वमप्यस्य तच्छक्त्यैवाऽवियुक्तता ।' (तं० १।६८)

इति । तथा

'एक एवास्य धर्मोऽसौ सर्वाक्षेपेण वर्तते ।

तेन स्वातन्त्र्यशक्त्यैव युक्त इत्याञ्जसो विधिः ॥' (तं० १।६७)

इति । एतदेव हृदयं विमर्शः सार इत्यादिशब्दैः परिभाष्यते, इदमेव जडप्रकाशाद्वैलक्षण्याधायि । यदुक्तं प्रत्यभिज्ञायाम् -

'स्वभावमवभासस्य विमर्शं विदुरन्यथा ।

प्रकाशोऽर्थोपरक्तोऽपि स्फटिकादिजडोपमः ॥'(ई०प्र० १।५।१०)

इति । एवं मायाध्वनि दुरपह्नवत्वाद्भासमानस्यापि भेदस्य आभाससारत्वात् न स्वतन्त्रशिवाद्वयभावखण्डना इति ॥ ३ ॥

ननु परमेश्वरस्य तत्तद्विश्ववैचित्र्यप्रथने किमुद्दिश्य प्रवृत्तिः किंच निमित्तं इत्याशंक्याह-

**स एव भैरवो देवो जगद्भरणलक्षणः ।**

**स्वात्मादर्शे समग्रं हि यच्छक्त्या प्रतिबिम्बितम् ॥ ४ ॥**

स एव शक्तिमान् स्वतन्त्रोऽनुत्तरभट्टारकः स्वस्वातन्त्र्येणोद्भासितस्य विश्वस्य स्वात्मभित्तिसंलग्नतया धारणपोषणस्वभावत्वाद् भैरवो विश्वभरितस्वरूपः

'भियात्सर्वं रचयति सर्वदो व्यापकोऽखिले ।

इति भैरवशब्दस्य सन्ततोच्चारणाच्छिवः ॥' (वि० भै० १३०)

इति विज्ञानभैरवोक्तनीत्या, पूर्णाहन्ताचमत्कारनिर्भरभैरवस्वरूपे विश्रमणाद्वा विश्वेनापि धार्यमाणः पोष्यमाणश्च सदैव विश्वमयत्वेन प्रस्फुरणात्, इत्युक्तं जगद्भरणलक्षण इति । भैरवसंविदो हि व्यतिरिच्यमानस्यान्यस्याचेत्यमानत्वात् सर्वत्र पारिपूर्ण्यं विश्वभरितस्वभावत्वात् । तस्यैव स्वैश्वर्यघनतामहिम्ना यच्छिवादि-

भूम्यन्तेन तत्त्वभूतभावाद्यात्मना विजृम्भणं तदेव स्वात्मगोपनात्मक्रीडारसिकस्य देवत्वं, विस्तरतस्तु भैरवदेवशब्दयोर्विवरणं श्रीतन्त्रालोके द्रष्टव्यम् । एतदेव वश्वसृष्ट्यादौ परमेश्वरस्य निमित्तं न पुनः प्राणिनां कर्मादि तत्सापेक्षत्वे हि स्वातन्त्र्यं (न पुनः प्राणिनां कर्मादि तत्सापेक्षत्वे हि स्वातन्त्र्यं) विघटेत, स्वातन्त्र्यमेवानन्दघनत्वं तदेव घनताऽतिशयप्राप्ता समुच्छलत्स्वभावत्वेन तत्तद्विश्ववैचित्र्येण स्फुरति द्योतते सर्वोत्कर्षतयाप्यास्ते । यदुक्तम् -

'तस्य स्वतन्त्रभावो हि किं किं यन्न विचिन्तयेत् ।

तदुक्तं त्रिशिरःशास्त्रे स बुद्ध इति वेत्ति यः ॥

इति । यच्छक्त्या पराख्यया स्वात्मैव स्वच्छत्वादिना प्रतिबिम्बसहत्वाद् दर्पणस्तस्मिन् समग्रं प्रमातृप्रमेयात्मभावजातमुपादानादिसामग्रीनिरपेक्षत्वेन प्रतिबिम्बितं, दर्पणो हि बिम्बसापेक्षः स्वान्तस्तत्तद्रचनावैचित्र्यं धत्ते, एषा पराशक्तिस्तन्निरपेक्षमेव विश्ववैचित्र्यमाभासयतीत्येतदजाड्यस्य विलसितम् । यदाह भट्टउत्पलदेवः-

'निरुपादानसंभारमभित्तावेव तन्वते ।

जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने॥' (२२।६)

इति । श्रीशक्तिसूत्रेष्वपि -

स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति ।' (श० सू० २)

इति । श्रीमानाचार्योऽपि-

'अन्तर्विभाति सकलं जगदात्मनीह

यद्वद्विचित्ररचना मकुरान्तराले ।

बोधः पुनर्निजविमर्शनसारयोगा —

द्विश्वं परामृशति नो मकुरस्तथा तु ॥, (तं० सा०३ आ०)

इति । अणुप्रत्यभिज्ञायामपि-

नाथ त्वया विना बिम्बं स्वच्छे स्वात्मनि दर्शितम् ।
प्रसेनादर्पणेनेव प्रभावाद्भावमण्डलम् ॥ ४ ॥

इति । एवं वैश्वरूप्योल्लासे भेदामर्शनात् कथं भैरवस्याद्वैतत्वं स्यादित्याशंक्याह

**तस्यैवैषा परा देवी स्वरूपामर्शनोत्सुका ।**
**पूर्णत्वं सर्वभावेषु यस्या नाल्पं नचाधिकम् ॥५॥**

तस्यैव भैरवात्मनः संवित्प्रकाशस्य एषा वैश्वरूप्येणोल्लसन्ती स्वातन्त्र्याख्या शक्तिर्द्योतनादिक्रीडाशीलत्वाद् देवी स्वात्मनि प्रकाशाभेदेन विश्वस्यामर्शनावभासाभ्यां परा पूर्णतया स्फुरन्ती तत्रैव दर्पणनगरादिवद्भेदाभेदतया विश्वस्य परामर्शनादत्यन्तं भेदेनापि मायाप्रमातुरुचितेन विमर्शनात् परापरादिसंज्ञामवाप्तापि स्वरूपस्यामर्शने स्वातन्त्र्यात् तत्तद्भावजातं स्वात्ममयमेवेति विश्वाहंभावचमत्कृतौ उत्सुका स्वात्मानमेव तथातथा परामृष्टुमौत्सुक्येन प्रवृत्ता, एवं त्रिधाप्यामर्शने व्यतिरिक्तभावौन्मुख्यविरहात्पारिपूर्ण्यादनपेता स्वस्वातन्त्र्येण स्वमेव स्वात्मनामृशति । यदुक्तं प्रत्यभिज्ञायाम्

'स्वातन्त्र्यामुक्तमात्मानं स्वातन्त्र्यादद्वयात्मनः ।
प्रभुरीशादिसङ्कल्पैर्निर्माय व्यवहारयेत् ॥' (ई० प्र० १।५।१६)

इति स्थित्या द्वैतोल्लासेऽपि नाद्वैतहानिरिति । अत एव यस्याः सर्वभावेषु साकल्येन विश्ववर्तिषु नीलसुखादिषु पदार्थेषु पूर्णत्वमखण्ड' पारिपूर्ण्यं, तच्च नाल्पं नचाधिकं भावानामुदयप्रलययोः संविदोः न्यूनाधिक्याभावात् रुद्रक्षेत्रज्ञादिप्रमातृष्वपि चितो न्यूनाधिकतया विशेषाभावात्पूर्णत्वं न हीयते । यदुक्तं ब्रह्मदर्शने

'यैव चिद्गगनाभोगभूषणे व्योम्नि भास्करे ।
धराविवरकोषस्थे सैव चित्कीटकोदरे ॥'

इति । यथा प्रदेशाकाशानां महाकाशादनतिरिक्ता वृत्तिरेवं नीलादिप्रकाशानां-ब्रह्मणो बृहत्त्वेन बृंहकतया च तदनधिकवृत्तित्वमिति ॥ ५ ॥

अत एवाभिन्नानि कृत्यानि करोति परमेश्वरो न भेदमयानीत्याह

**एष देवोऽनया देव्या नित्यं क्रीडारसोत्सुकः ।**
**विचित्रान् सृष्टिसंहारान् विधत्ते युगपद्विभुः ॥६॥**

एष प्रत्यभिज्ञापदमारूढो द्योतनादिलक्षणश्चिद्देवोऽनयोक्तलक्षणया परा वाक्रूपया विश्वोल्लासनादिक्रीडाशीलत्वाद् देव्या देवसम्बन्धिन्या वा तत्समवायधर्मिण्या सह नित्यमनविरतं तत्तद्भूमिकाविजृम्भणेऽपि अव्युच्छिन्नत्वात् सदोदितायां क्रीडायां पञ्चकृत्यात्मिकायां यो रसोऽभिलाषस्तत्रोत्सुको निरपेक्षं प्रसह्य तत्र प्रवर्तमानः । यदुक्तम्

'सदा सृष्टिविनोदाय सदा स्थितिसुखासिने ।
सदा त्रिभुवनाहारतृप्ताय स्वामिने नमः ॥'(उ०स्तो० २२।६)

इति । तथा

'प्रतिक्षणमविश्रान्तस्त्रैलोक्यं कल्पनाशतैः ।
कल्पयन्नपि कोऽप्येको निर्विकल्पो जयत्यजः ॥(स्त०चि० ११२)

इति । तच्च क्रीडनं विचित्रम् तथाहि पराभूमौ प्रकाशघनतामयानां भावानामविच्छिन्नावभासादिना सदोदितमेव पञ्चकृत्यविधायित्वं; पश्यन्त्यां चोद्बुभूषितामिदन्तावभासानामहन्तारसोद्रेकतया तत्रापि स्वाङ्गकल्पत्वेन भेदासूत्रणां विजृम्भयितस्तद्भूमिकामापन्नस्य तादृशमेव कृत्यकारित्वम्, मध्यायां पुनरस्फुटतयाभासमानानां भावानामहन्तायामेवेदन्ताप्राधान्योद्रेचणात् तादृशमेवास्फुटकल्पं कृत्यम् संकोचकाष्ठायां तु मायीयप्रमातृतायामपि सर्वथा स्वात्मविस्मृतौ तादृशमेव भेदैकसारं कृत्यम्, तत्रापि प्रमातृप्रकाशमन्तरेण नीलादीनां-

मर्पितष्टत्वात् तत्कृत्यं प्रकाशमयमेव परिज्ञाय च यत्पुनः स्वरूपलाभप्रत्यापत्त्याऽणुभावात्स्वात्मनो विमुक्तिरित्यागमेषु परिगीयते इति, अत एवाह विचित्रानिति। नच ब्रह्मादिवन्नियतशक्त्या संकुचितत्वान्नियतमेव तदन्यतरत्कर्तुं शक्नुयादित्यभिप्रेत्याह— सृष्टिसंहारानिति बहुवचनं कृत्यान्तराणामुपलक्षणार्थम्। तेन सृष्टिस्थितिसंहारपिधानानुग्रहान् विधत्ते करोति। कालादिकृतोऽत्र न कश्चिन्नियम इत्याह— युगपदिति अक्रमेण, अकालकलिते परमेश्वरे तत्क्रमाभावात्, विभुरिति देशाद्यवच्छेदशून्यत्वे हेतुः अत एवाक्रमेणैव विचित्रास्वेतास्ववस्थासु विचित्राणां सृष्टिसंहाराणां कर्तृत्वमविच्छिन्नम्। अथ च कल्पितप्रमातर्यपि सदैव सर्गादिविनोदासक्तः परमेश्वरः स्वस्वातन्त्र्यमाहात्म्येन करणेश्वरीचक्रं समुल्लास्य पर्यान्दोलनक्रीडया निखिलं प्रमेयजातं सृष्टिकाल्याद्युपारोहणेन प्रोल्लासयन् परिपाट्या क्रमेण वा कालसङ्कर्षणीधाम्नि विश्रम्य स्वात्मविश्रान्तिरूपपूर्णाहंपरामर्शचमत्कारधामासादयति एवमेव भूयोभूयः क्रीडारसौत्सुक्येन विचित्रसृष्ट्यादिकारित्वं परिशीलयतीति सहृदयसंवेद्यमेतत्तन्मुखादवगन्तव्यम्। गृहीतपशुभूमिकस्य शिवस्य एतदेवाभिज्ञानं यदाह श्रीक्षेमराजः—'तथापि तद्वत्पञ्चकृत्यानि करोति' इति। अतः सर्वमिदं स्वातन्त्र्यस्यैव विलसितमिति ॥६॥

तदाह-

**अतिदुर्घटकारित्वमस्यानुत्तरमेव यत्।**
**एतदेव स्वतन्त्रत्वमैश्वर्यं बोधरूपता ॥७॥**

एवमस्य स्वातन्त्र्यशालिनः परमेश्वरस्य यदेवाभिन्नस्य प्रकाशैक्येनावस्थितस्य ग्राह्यग्राहकात्मनो विश्वस्येदन्ताभावेनाहन्ताधिक्येन सदाशिवे ईषत्स्फुटीभावेनेश्वरे समधृततुलापुटन्यायेन शुद्धविद्यायां भेदैकप्राणेऽशुद्धाध्वनि अत्यन्तभेदेन स्वस्माद्बहिरवभासनं यदपि भासितस्यापि पुनरभेदेन स्वात्मनि प्रकाशघने निमज्जनं नामानुत्तरमनाश्रितादिभ्योऽपि अत्युत्कृष्टमतिदुर्घटकारित्वमेतदेव स्वतन्त्रत्वं स्वाच्छन्द्यं सर्वशक्तिक्रोडीकारि तत्रैव शक्त्यन्तराण्यन्तर्भूय तन्मुखप्रेक्षित्वात् तदापेक्षा-

रयैव, अत एव स्वातन्त्र्यमेव मुख्यमैश्वर्यं येनानुत्तरानन्दाद्युद्यक्रमेण विसर्गपर्यन्तेन यामलप्रसरेण वा मातृकामालिनीभावमेत्य तत्तद्विचित्रवाच्यवाचकात्मना वैश्वरूप्येण प्रस्फुरणम् । यदुक्तम् -

'तस्मादनुत्तरो देवः स्वाच्छन्द्यानुत्तरत्वतः ।
विसर्गशक्तियुक्तत्वात् संपन्नो विश्वरूपकः ॥'

इति । अस्वतन्त्रस्य हि अनीश्वरतया विश्वमुद्भावयितुमसामर्थ्यात् विश्वविसर्गे तथा पञ्चविधकृत्यकारित्वे च स्वातन्त्र्यस्यैव मुख्यनिमित्तत्वात् । यदुक्तं प्रत्यभिज्ञायाम्-

'चितिः प्रत्यवमर्शात्मा परावाक्स्वरसोदिता ।
स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मनः ॥
सा स्फुरत्ता महासत्ता देशकालाविशेषिणी ।
सैषा सारतया प्रोक्ता हृदयं परमेष्ठिनः ॥', ई० प्र० (१।५।१३)

इति । ऐश्वर्यमप्यस्यापरिच्छिन्नमेव, परिच्छेदे हि ब्रह्मविष्ण्वादिवन्नियतैकतरकार्यैकक्रियमाणत्वादनीश्वरत्वमेव, एवैव बोधरूपता जडप्रकाशादैलक्षण्यापादकत्वाद्विमर्शमयं बोधरूपत्वम् । यदुक्तं श्रीप्रत्यभिज्ञायाम् -

'आत्मात एव चैतन्यं चित्क्रिया चितिकर्तृता ।
तात्पर्येणोदितस्तेन जडात्स हि विलक्षणः ॥', ई० प्र० (१।५।१२)

इति । अन्यथा स्वातन्त्र्यविकलस्य बोधस्य विज्ञानाकलवदबोधरूपत्वान्मलाक्रान्तत्वं दुर्वारं स्यादिति ॥७॥

ननु किं नाम बोधरूपत्वं यदबोधाद्विलक्षमित्याशंक्य तल्लक्षणं निरूपयन्नाह-

**परिच्छिन्नप्रकाशत्वं जडस्य किल लक्षणम् ।**
**जडाद्विलक्षणो बोधो यतो न परिमीयते ॥८॥**

जडप्रकाशस्य स्वप्रकाशस्वभावत्वाभावात् स्वात्मानमप्यवभासयितुं सामर्थ्यं नास्ति

का कथा परस्य प्रकाशने, तत्रानेलमूकत्वाद्बोधस्वभावाधिरोहणानुपपत्तिः । जडो हि किल देशकालाकारविशेषितो बोधेन परिच्छिद्यते प्रतियोगिव्यवच्छेदेन अघटाद्व्यवच्छिन्नो घट इवातद्व्यपोहनपूर्वतदध्यवसायजीवितताभाश्रयतीति इत्येतज्जडस्य लक्षणम् तच्च प्रमात्राश्रयं ममेदं भातीति जीवन्तं प्रमातारमाश्रित्यैव घटादयः परिस्फुरन्ति नैव तेषां निजं किमपि प्रकाशमानत्वम् कल्पितस्यापि प्रमातुर्जडैकशरणत्वात् तत्पक्षपातित्वम् तस्मात्संविन्मयप्रमातर्यैव परिमीयमानस्य जडप्रकाशस्य प्रतिष्ठानम् तद्वैलक्षण्येन हि बोधो देशादिविशेषानाकलितत्वेन परिच्छेदपदवीमनारूढो नैव परिमीयते । देशादेः परिच्छेदकस्यापि प्रकाशस्वभावाद्व्यतिरिक्ताव्यतिरिक्तविकल्पोपहतत्वात् । नापि बोधव्यतिरिक्तस्य प्रमात्रन्तरस्यासत्वात् तेन क्रियमाणस्य अतद्व्यपोहनस्याभावेनाहमात्मिकाबोधविश्रान्तिर्विकल्पास्पदमियादिति प्रकाशविश्रान्तिरसाकेङ्कतिर्कोत्यादि अत्र जडाद्वैलक्षण्यं बोध्यम् । यदुक्तम् -

'प्रकाशस्यात्मविश्रान्तिरहम्भावो हि कीर्तितः ।
उक्ता सैव च विश्रान्तिः सर्वापेक्षानिरोधतः ॥
स्वातन्त्र्यमथ कर्तृत्वं मुख्यमीश्वरतापि च (अज०प्र०सि०२३)

इति । एतदेव बोधस्य स्वप्रकाशत्वं यत् स्वयं भासमानः परमपि भासयन् स्वस्वातन्त्र्यात्म्यमपाचमत्करोति परमपि स्वाहन्तासंरम्भात्प्रकाशयतीति ॥८॥

स्वातन्त्र्यावभासिताः सृष्ट्यादयोऽपि न भिन्नविषया इत्याह -

**एवमस्य स्वतन्त्रस्य निजशक्त्युपभेदिनः ।**
**स्वात्मगाः सृष्टिसंहाराः स्वरूपत्वेन संस्थिताः॥९॥**

एवमयं परमेश्वरः स्वतन्त्रो निजया स्वाभिन्नया स्वसमवेतत्वात् शक्त्या स्वातन्त्र्येण विश्वसिसृक्षात्मकेन भेदमुपगच्छति अनाश्रितशिवादारभ्य सकलान्तप्रमातृवर्गपर्यन्तं पाञ्चदश्यादिभेदेन तदनुरूपप्रमेयभेदेनापि जडाजडात्मावभेदमापद्यते, ।

अर्थाच्छक्तिरेव तत्तद्भावमण्डलरूपेणोल्लसन्ती विविधवाच्यवाचकतां भजते शक्तिमान्पुनः सर्वस्य स्वातन्त्र्यसारत्वादेक एवाच्युतप्राच्यस्वरूपः केवलं परस्परलोलीभावं प्राप्तानां शक्तीनां भासनोपरञ्जनादिभिरापाततो भेदोपभेदित्वमिव याति, न पुनस्तस्य सङ्कोचावभासनमात्रं विनान्यत्परिणामविवर्तादि संभवितुमर्हति। परिणामविवर्तादेस्तु रूपान्तरतदन्यथाभावत्वे बोधस्वभावं प्रति तद्विरुद्धाप्रकाशत्वं प्रसज्यते। तत्प्रसक्तावपि विश्वस्यान्धतमसप्रख्यत्वात् व्यवहारविप्रलोपः स्यादिति। तत्रेयति भेदपरिग्रहे परमेश्वरस्य पूर्णाहन्ताचमत्कारसोरविश्वमयत्वाद्विश्वगताः सृष्टिसंहाराः स्वात्मगाः स्वाभिन्नाः, पञ्चविधकृत्यानामुपलक्षणमेतत् शिवपदे प्रकाशैक्येन स्थितत्वात्स्वरूपत्वे न स्वोङ्गकल्पताय। संस्थिताः। अर्वाक्पदेऽपि श्रीकण्ठाघोरभट्टारकादिभिः क्रियमाणस्य सर्गादेः संवित्प्रकाशादबहिरवस्थितत्वात् तन्मयत्वमेवेति तत्रापि न मनागपि विभेदकलनाया विषयीभवन्तीति, यदुक्तम् —

•... ... ... ... प्रकाश एवास्ति स्वात्मनः स्वपरात्मभिः।,

इति ॥९॥

नन्वित्थं सर्वतः स्वस्वातन्त्र्यस्य विलसितत्वे कथमणूनां बन्धो भवतीत्याशंक्य युग्मेनाह —

**तेषु वैचित्र्यमत्यन्तमूर्ध्वाधस्तिर्यगेव यत्।**
**भुवनानि तदंशाश्च सुखदुःखमतिश्च या ॥१०॥**
**यदेतस्यापरिज्ञानं तत्स्वातन्त्र्यं हि वर्णितम्।**
**स एव खलु संसारो मूढानां यो विभीषकः ॥११॥**

तेषु सर्गादिषु पञ्चविधकृत्येषु अपरादिशक्त्युल्लासाद्दर्पणनगरादिवद्भेदाभेदपरामर्शतो भेदैकमयत्वपरामर्शनाच्चात्यन्तं यद्वैचित्र्यं यद्वा क्रमोक्रमाभ्यां विश्वत्र यत्सर्गादिवैचित्र्यं, क्रमो हि नियत्यधीनः परमेश्वरस्य स्वतन्त्रत्वान्नियतिशक्तिमुखप्रेक्षित्वाभावान्न कापि परिपाटी अपेक्ष्यते! अत एव स स्वेच्छयैव क्रमेणाक्रमेण वा करोतीत्यर्थः। यच्चैव ऊर्ध्वाधस्तिर्यक्तत्तत्सन्नि-

वेशविशिष्टानि सर्गादिगोचराणि भुवनानि कालाग्न्यादेरनाश्रितान्तमष्टादशाधिकशतसंख्यानि संक्षेपेणागमेष्वाम्नातानि । यदुक्तं श्रीपूर्वशास्त्रे-

'एवं तु सर्वतत्त्वेषु शतमष्टादशोत्तरम् ।
भुवनानां परिज्ञेयं संक्षेपान्नतु विस्तरात् ॥

इति विस्तरेण तु भुवनानामानन्त्यमेव यच्च तदंशा भुवनानामनेके पुरादिविभागाः, तथा तत्तद्भुवनाद्यधिष्ठातृणामुपासनाभिः तत्तत्सालोक्याद्यवाप्तेर्नियतकालं तदीयैश्वर्योपभोगपरिसमाप्तौ तदूर्ध्वभुवनेशपदप्राप्तिः तत्रापि तदैश्वर्यादिसुखानुभवः आगमोक्तशुभाचरणाद्यसेवनाच्चाधोधो निरयपाते अनैश्वर्याद्याक्रान्तेदुर्गतिक्लेशानुभवः, इत्थं च या तेषु सुखदुःखमतिर्येन शुभाशुभकर्मसेवनात् कर्मानुरूपं तत्र तत्र संसरणम् । संवित्प्रकाश एव स्वस्वातन्त्र्यमाहात्म्यातिशयान्मूर्तिवैचित्र्येण देशाध्वानमुन्मीलयति, स एव भुवनतत्त्वकलात्मवाच्यं, तत्र मुख्यं वाच्यं भुवनानि तत्त्वकलयोस्तदन्तर्भावात् । भुवनादीन्यपि परमेश्वरान्न व्यतिरिक्तानि, तथात्वेऽप्रकाश्यमानत्वात्तत्सत्त्वानुपपत्तिः तस्मात्संविदेव तथा तथा बहिः प्रस्फुरतीति । यदुक्तम्

'मूर्तिवैचित्र्यतो देशक्रममाभासयत्यसौ ।

इति । तथा—

'आश्यानं चिद्रसस्यैवं साकारत्वमुपागतम् ।
जगद्रूपतया वन्दे प्रत्यक्षं भैरवं वपुः ॥'

इति । तथा—

'अध्वा समस्त एवायं चिन्मात्रे संप्रतिष्ठितः ।
यत्तत्र नहि विश्रान्तं तन्नभःकुसुमायते ॥ (तं० ८।३)

इति च ॥११॥

यदेतस्य भुवनतदंशादेस्तत्त्वाद्यध्वान्तराणामुपलक्षणीभूतस्यापरिज्ञानं स्वातन्त्र्यमेव भुवनाद्यात्मना प्रसरति एतदित्येतस्याप्रत्यभिज्ञानं तद्विपरीतदुःखाद्याकुलितबन्धपरिदृष्टिः तद्धि स्वातन्त्र्यमतिदुर्घटकारित्वसंपादनसामर्थ्यं वर्णितम् यदुक्तम्—

'अनावृते स्वरूपेऽपि यदात्माच्छादनं विभोः ।
सैव माया यतो भेद एतावान्विश्ववृत्तिकः ॥' [तं ४ । ११]

तथा च परमार्थसारे—

'परमं यत्स्वातन्त्र्यं दुर्घटसंपादनं महेशस्य ।
देवी मायाशक्तिः स्वात्मावरणं शिवस्यैतत् ॥'

इति । स एव खलु जडानां मायामोहितानां संसारो यो विभीषको रज्जुभुजङ्गभ्रमवन्मरणादित्रासजननः । अयं भावः, यथा भ्रान्त्या विकल्पकल्पितेऽर्थशून्ये वस्तुनि रौद्राद्याकृतिसंभावनया भीषणीयमाकारविशेषं समुल्लिख्यानर्थकारिणीं तदर्थक्रियां धत्ते, एवमेव स्वस्वातन्त्र्यापरिज्ञानादणुतामापन्नः स्वात्मा वर्णाश्रमजात्याद्यभिमानेन निबध्यते, प्रबुद्धा हि स्वात्ममयं विश्वमन्तर्बहीरूपतया प्रत्यभिजानानाः संसारान्मुच्यन्ते नच तदपरिज्ञाने किमपि स्वात्मगोपनासतत्त्वक्रीडां विना कारणमुत्पश्यामः, तथातथा निगूहितपरमार्थत्वेन यन्महेश्वरस्य प्रसरद्रूपत्वं तदपि तस्य स्वातन्त्र्यमेव । इयं हि विमर्शलता विश्वसिसृक्षया प्रसरन्ती क्रमेण वाच्यवाचकात्मषडध्वात्मना पल्लविताज्ञानां बन्धयित्रीत्यर्थः । यदाह स्पन्दे—

'सेयं क्रियात्मिका शक्तिः शिवस्य पशुवर्तिनी ।
बन्धयित्री स्वमार्गस्था ज्ञाता सिद्ध्युपपादिका ॥'

इति ॥ ११ ॥

ननु स्वातन्त्र्यप्रत्यभिज्ञानं संसारांच विरतिः कथमणोर्भवतीत्याशंक्य

युगलकेनाह — 

तत्प्रसादरसादेव गुर्वागमत एव वा ।
शास्त्राद्वा परमेशस्य यस्मात्कस्मादुपागतम् ॥१२॥

यत्तत्त्वस्य परिज्ञानं स मोक्षः परमेशतः ।
तत्पूर्णत्वं प्रबुद्धानां जीवन्मुक्तिश्च सा स्मृता ॥१३॥

विश्वमयतदुत्तीर्णस्वस्वरूपं प्रत्यभिज्ञातुं किमपि तपःपूजाक्रमादि न प्रगल्भते, तस्य मायीयत्वेनान्धतमसप्रख्यत्वादमायीयं संवित्प्रकाशं प्रकाशयितुमसामर्थ्यात् । स्वात्मोपलब्धौ तपोवैराग्याद्यपेक्षायामपि तत्संपत्तेः कारणान्तरमन्वेष्टव्यं, तत्रापि कारणान्तरमित्यनवस्थापातस्तथा च स्वातन्त्र्यं हीनं भवेत् तस्मात्परमेश्वरः स्वेच्छयैव विश्वक्रीडामुद्दिभासयिषुः स्वशक्त्या तिरोधानाख्यया स्वात्मानं तिरोधाय पुनरपि तयैवानुग्रहाख्यया प्रत्यभिज्ञाय स्वमुद्वेष्टयते तच्चोद्वेष्टनं परशक्तिपातवशात्प्रतिभाप्रसादनपूर्वं स्वात्मशिवताप्रत्यभिज्ञानं शक्तिपातवैचित्र्याद्बहुधा भवतीत्याशयेन शक्तिपातकार्याणि निरूपयन्नाह- तदिति, कश्चित्तीव्रशक्तिपात-पवित्रितहृदयः सिद्धयोगिनीदर्शनचरुभोजनादिनानुपायपथेन स्वात्मानं प्रत्यभिजानातीति । यदुक्तं तन्त्रालोके -

'सिद्धानां योगिनीनां च दर्शनं चरुभोजनम् ।
कथनं संक्रमः शास्त्रे साधनं गुरुसेवनम् ॥
इत्याद्यो निरुपायस्य संक्षेपोऽयं वरानने ।' इति

अत एवोक्तम्—'तत्प्रसादरसादेव' इति एवशब्दः कारणान्तरं निरस्यति । प्रसादो हि संविन्नैर्मल्येन सकृदेव भैरवीयपरप्रतिभोन्मज्जनं तत्र पौनःपुन्येनोपायपरिशीलनाभावात् । यदुक्त तन्त्रालोके -

'उपायैर्न शिवो भाति भान्ति ते तत्प्रसादतः ।
स एवाहं स्वप्रकाशो भासे विश्वस्वरूपकः ॥

इत्याकर्ण्य गुरोर्वाक्यं सकृत्केचन निश्चिताः ।
विना भूयोऽनुसन्धानं भान्ति संविन्मयाः स्थिताः ;॥

इति । तथा कश्चित्तीव्रशक्तिपातानुगृहीतो गुरुमुखादागमार्थं विज्ञाय अकिञ्चिच्चिन्तकत्वादिशांभवोपायक्रमेण परतत्त्वाभिज्ञतामेतीत्यत उक्तम् — 'गुर्वागमत एव वा, इति । गुरुणोपदिष्टं प्रतिबोधक्रममाश्रित्य विश्ववैचित्र्यस्य चित्प्रतिबिम्बत्वेन परामर्शनादित्यर्थः । यदुक्तम् -

'इत्थं विश्वमिदं नाथे भैरवीये चिदम्बरे ।
प्रतिबिम्बमलं स्वच्छे न खल्वन्यप्रसादतः ॥' (तं० ३।६५)

इति । तथा कश्चित्सत्तर्कादिसहकृतेन पारमेशशास्त्रेण शास्त्रपरिपाट्या प्रत्यभिज्ञां प्राप्नोति । तदुक्तम् —

'यस्य स्वतोऽयं सत्तर्कः सर्वत्रैवाधिकारवान् ।
अभिषिक्तः स्वसंवित्तिदेवीभिर्दीक्षितश्च सः॥' (तं० ४।४२)

इति । अतः 'शास्त्राद्वा परमेशस्य' इत्युक्तम् । अधरदर्शनानि परिहृत्य पारमेशं त्रिकादिशासनमवलम्ब्य इत्यर्थः । यदुक्तम्-

'स समस्तं हि शास्त्रार्थं सत्तर्कादेव मन्यते ।
शुद्धविद्या हि तन्नास्ति सत्यं यद्यन्न भासयेत ॥'(४।४४)

इति । तथा मन्दशक्तिपातवान् कश्चिदुच्चारकरणध्यानादिना आणवोपायक्रमेण ऊर्ध्वोर्ध्वसोपानाधिरूढेऽनुत्तरपदविश्रान्तिं यातीत्यत आह - 'यस्मात्कस्मादुपागतमिति' यं कंचित् स्थूलं ध्यानकरणाद्युपायमाश्रित्य उपागतं प्राप्तमित्यर्थः, येनैषां निर्व्युत्थानं सदोदितसमावेशो जायते। इत्थं यदनुत्तरसंवित्तत्त्वस्य परिज्ञानं विश्वपरिपूर्णाहंभावचमत्कारोल्लासेन स्वस्वातन्त्र्याभिव्यक्तिः स एव मोक्षः, नतु देवाद्यवच्छिन्न-स्थानान्तरप्राप्तिः । यदाहाचार्यः —

'मोक्षस्य नैव किञ्चिद्धामास्ति नचापि गमनमन्यत्र ।
अज्ञानग्रन्थिभिदा स्वशक्त्यभिव्यक्तता मोक्षः' ॥ (प०सा०६०)

इति । सैव परमेशता तत्तद्विश्वात्मना प्रस्फुरद्रूपत्वं पारमैश्वर्यमभिन्नप्रकाशमयं नतु भेदमयाणिमासिद्धयः । तदेव पूर्णाहन्ताविमर्शमयबोधशालिनां प्रबुद्धानां पूर्णत्वं विश्वभरितस्वभावत्वं सैव देहप्राणादि धारयतां जीवतां प्रमातृणां मुक्तिः जीवच्छिवावस्था शास्त्रेषु स्मृतेति ॥१२-१३॥

एवं बन्धमोक्षकल्पनापि कल्पितैवेत्याह—

**एतौ बन्धविमोक्षौ च परमेशस्वरूपतः ।**
**न भिद्येते न भेदो हि तत्त्वतः परमेश्वरे ॥१४॥**

एतौ समनन्तरोक्तलक्षणौ बन्धमोक्षौ च परमेश्वरेच्छामात्रकल्पितत्वात् परमेशस्वरूपतः संवित्स्वातन्त्र्यान्न भिद्येते भिन्नतया स्थितिं न यातः, तद्व्यतिरिक्तत्वेऽसंवेद्यमानत्वान्न प्रस्फुरेतामित्यर्थः । यतः स्वेच्छयैव स्वात्मप्रच्छादनक्रीडारसिकत्वान्महेश्वरो विश्वनाट्यक्रीडाप्रदर्शनाभिप्रायेण अन्तरात्मरङ्गे तत्तद्भूमिकाग्रहणं विदधत् विभावानुभावादिभिर्व्यञ्जितैः सात्त्विकभावादिसहचरितैस्तत्तत्स्थायिभावैः समुन्मिषितामलौकिकरसचमत्कृतिमास्वादयतीत्येतद्वास्तवार्थाभिज्ञानविरहादपराभिः शक्तिभिः प्रमुषितपरमार्थानां बन्धाभिमानो जायते, अनुग्रहभाजनानां तु चिद्घनसंवित्स्वातन्त्र्यमेवान्तर्बहिर्विश्वोल्लासेन प्रस्फुरतीत्यभिज्ञातवतां अघोरात्मना शक्तिचक्रेण स्वाभिन्नं प्रकाशघनात्मविश्वं प्रदर्शयता लब्धपरमार्थनिधीनां मोक्षाभिमान इत्युभयमिदं भगवान् स्वाच्छन्द्येन विजृम्भयति । अतस्तच्छक्तिमयत्वात् तस्मान्न भिन्नमेतदिति तात्पर्यं हेतुवचनेन द्रढयति, न भेद इति, हि यस्मात्तत्त्वतः परमार्थत आत्मनि परमेश्वरे भेदो नास्ति सर्वस्य प्रकाशसारपरमार्थत्वेनाणुमात्रमपि भेदकलनाया

असंभवात् तस्मात्पूर्णाहंभावचमत्कारोद्रेकात् पूर्णं पूर्णं विजृम्भमाणं नापूर्णं किमपि बन्धमोक्षादिकल्पनेति सर्वमनवद्यम् । यदुक्तम्—

'संसारोऽस्ति न तत्त्वतस्तनुभृतां बन्धस्य वार्तैव का
बन्धो यस्य न जातु तस्य वितथा मुक्तस्य मुक्तिक्रिया ।
मिथ्यामोहकृदेष रज्जुभुजगच्छायापिशाचभ्रमो
मा किञ्चित्त्यज मा गृहाण विहर स्वस्थो यथावत्स्थितः ॥'

इति ॥१४॥

एवं परमार्थाभिज्ञानां जीवदवस्थायामेव समाश्वासदायिनीं पारमेश्वर्यरसनिर्भरां तत्समापत्तिमासादयितुमभ्युपायमाह -

**इत्थमिच्छाकलाज्ञानशक्तिशूलाम्बुजाश्रितः ।**
**भैरवः सर्वभावानां स्वभावः परिशील्यते ॥१५॥**

इत्थमुक्तपरामर्शनेन सर्वभावानामन्तर्बहिर्वर्तिनां नीलसुखादीनां स्वभावः प्रकाशात्मा भैरवो विश्वभरितस्वभावत्वात् पूर्णः स्वतन्त्रशिवप्रकशः परिशील्यते परामृश्यते । स्वात्मन्येव चिदाकाशे विश्वमस्म्यवभासयन् स्रष्टा विश्वात्मक इति प्रथया भैरवात्मतेत्युक्त्या भैरवीयो संविदेव हि बहिरन्तस्तत्तद्भावाद्यात्मना चकास्ति यत्किञ्चित्करणेश्वरीभिराभास्यते तत्सर्वं स्वात्मैव स्वात्मानं स्वातन्त्र्यात्परामृशति न व्यतिरिक्तमिति यावत् यदुक्तमीश्वरप्रत्यभिज्ञायाम् -

'स्वात्मैव स्वात्मना पूर्णा भावा भान्त्यमितस्य तु ।'

इति । कीदृश इत्याह - इच्छेति, कलेति, क्रियाशक्तिः इच्छाज्ञानक्रियाशक्तय एवारात्रयसाम्याच्छूलं तत्र यन्मत्स्योदरीमतादिप्रसिध्द्या सङ्कोचविकासधर्मशालि पद्मुन्मनसं पदं तदाश्रितस्तदुत्तीर्णतया भासमान इत्यर्थः

अथच विश्वस्य संवित्प्रकाशादनतिरिक्ततया स्थितिं प्रदर्शयितुं श्रीपराबीजस्याप्युदयः प्रोक्तः, तत्र स्वभाव इत्यनेनामृतबीजस्योद्धारः कृतः तस्यानच्कत्वादुच्चारणमशक्यमित्यतः 'अस्मिंश्चतुर्दशे धाम्नि स्फुटीभूतत्रिशक्तिके ।, इत्युक्त्या इच्छाकलेत्यनेन शूलबीजोद्धारः । भरणवमनस्वभावत्वाद्भैरव इत्यनेन बहिरन्तारूपतया द्विधा विसर्गस्योद्धारः । सर्वभावानामित्यनेनास्य व्याप्तिरुक्ता । यदुक्तं मालिनीविजये—

'सार्णेनाण्डत्रयं व्याप्तं त्रिशूलेन चतुर्थकम् ।
सर्वातीतं विसर्गेण पराया व्याप्तिरिष्यते ॥'

इति ।

'तथाहि सदिदं ब्रह्ममूलं मायाण्डसंज्ञितम् ।
इच्छाज्ञानक्रियारोहं विना नैव सदुच्यते ॥
तच्छक्तित्रितयारोहाद् भैरवीये चिदम्बरे ।
विसृज्यते हि तत्तस्माद्बहिर्वाथ विसृज्यते ॥,

इति च । एवंव्याप्तिके पराबीजे निरन्तराभ्यासकरणात्पारमेश्वरसमावेशादैश्वर्यसिद्धिरिति विश्वसिद्धिकारणैतद्बीजपरामर्शनात्करणस्य कटाक्षेण प्रदर्शनं सूचितवानाचार्यः ॥१५॥

इदानीमाचार्यः स्वनामकीर्तनाच्छात्रार्थं प्रत्यभिमुखीकरणादुपसंहरति-

सुकुमारमतीन् शिष्यान्प्रबोधयितुमञ्जसा ।
इमेऽभिनवगुप्तेन श्लोकाः पञ्चदशोदिताः ॥१६॥

इति बोधपञ्चदशिका समाप्ता ॥

सुकुमारमतयो मन्दशक्तिपातवन्तः, अञ्जस सुखेन. स्पष्टमन्यत् ॥१६॥

यां बोधपञ्चदशिकां मतिमान्द्यभाजां
सम्बोधनाय निबबन्ध गुरुः सुरम्याम् ।
माहेश्वरोऽभिनवगुप्त इतीड्यनामा
तत्र व्यधाद्व्यवरणं हरभट्टशास्त्री ॥

भूनन्दनन्दवेदेऽब्दे(४९९०)लौकिके फाल्गुनेबदि ।
एकादश्यां तिथौ शास्त्री हरो विवरणं व्यधात् ॥

इति श्रीमहामाहेश्वराचार्यवर्य - श्रीमदभिनवगुप्तविरचितायां बोधपञ्चदशिकायां पं० हरभट्टशास्त्रिकृतं विवरणं समाप्तम् ॥



श्रीशिवार्पणमस्तु ॥



The Kashmir Series Of Texts & Studies.

No. LXXVII.

# PARAMARATHACHARCHA
## OF
## ABHINAVAGUPTA

———0: :0———

With Vivarana by

*Pt. Hara Bhatta Shastri*

Edited by
Pandit Jagaddhar Zadoo, M.A.,M..O.L., Shastri
Superintendent Research, Museum and
Archaeological Department,
His Highness' Govt.
J & K. Srinagar.

———:- -:———

Puolished uuder the authority of the Governmeot of
His Highness Rajarajeshwara Maharajadhiraj
Sri Maharaja Harisinghji Bahadur
G.C.S.I.,G C.I.E.,K.C.V.O;LL.D.
Maharaja of Jammu & Kashmir-

*Printed at*
*The Krishna Printing Press.*
*Kothi Bagh Srinagar,*
*Kashmir.*

A.D. 1947

ॐ

कश्मीरसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ७७

महामाहेश्वरश्रीअभिनवगुप्ताचार्यरचिता

# परमार्थचर्चा

पं० हरभट्टशास्त्रिकृत विवरणोपेता ।

————[०]————

श्रीराजराजेश्वर – महाराजाधिराज – कश्मीरनरेन्द्र

श्रीहरिसिंहजीबहादुराज्ञया

रिसर्च-कार्यालयाध्यक्ष-पण्डितजगद्धरजाडूशास्त्री

एम.ए.,एम.ओ.एल., इत्येतैः

कार्यालयस्थेतरसंपादकपण्डितसहायेन

संशोधनादिसंस्करणोत्तरं

संपाद्य

कृष्णा-प्रिंटिंग प्रेस श्रीनगरे इति मुद्रणालये मुद्रापयित्वा

प्राकाश्यमुपनीता

————[०]————

श्रीनगर – कश्मीर.

संवत् २००४ खैस्ताब्दः १९४७

# श्रीपरमार्थचर्चा

विवरणोपेता ।



अभिनवरूपा शक्तिस्तद्गुप्तो यो महेश्वरो देवः ।
तदुभययामलरूपमभिनवगुप्तं शिवं वन्दे

इह खलु वन्द्याभिधानः श्रीमदाचार्याभिनवगुप्तप्रभुस्तीव्रशक्तिपातपवित्रितहृदयानां जनानां हृत्सु त्रिकशास्त्ररहस्यार्थसंप्रदायं संचिक्रामयिषुः शाम्भवोपायक्रमगर्भिण्या परमार्थचर्चाख्यया सप्तश्लोक्या परभैरवसमावेशमुन्मीलयन् परमार्थचर्चां विरचयामास । तत्र संविद्घन एक एव चिदब्धिः परमेश्वरोऽन्तर्बहिः पारिपूर्ण्येन समुच्छलत्तत्तदनन्तविश्वलहरीनिर्भरः पूर्णाहंविमर्शमयचिच्चमत्कारशालिनि स्वमहिम्न्येवावस्थितः, न ततो मनागपि सङ्कोचकलना भिन्नवेद्यवेदकाद्यात्मा त्रैकालिकी बाह्यत्वेन समुदेतीति । अथच स एवानन्दघनतया समुच्छलत्स्वभावः स्वेच्छयैव स्वस्मादेव निरुपादानसहकारिकारणादिसंभारं

विश्वक्रीडामुद्भिभासयिष्यन् स्वस्वातन्त्र्येण शुद्धाशुद्धविमिश्ररूपाणि परस्परापोहनेनावभासमानानि मातृमेयादीनि तत्सम्बन्धांश्च कार्यकारणभाववैचित्र्यादीन् दर्पणप्रतिबिम्बवदनतिरिक्तानप्यतिरिक्ततया निर्भासयति स्वात्मन्येव देशकालाद्युपहितान् । निर्भासितानां च तेषां कालाद्यकलितः स एव पारमार्थिकस्वभाव इति वस्तुतो न किञ्चित् सृज्यते स्थाप्यते संह्रियते वेति । आनन्दघनश्चिदाकाश एव पूर्णपूर्णतरस्तथातथाघूर्णमानश्चकास्तीति षडर्धशास्त्रसंप्रदायः । अत्रैव वादिनो विब्रुवते, कथं चिदात्मा महेश्वरोऽन्तःस्थितं भावजातं स्वात्मनः सकाशात् स्वेच्छया बाह्यत्वेनाभासयन् बहिर्भूतमपि स्वात्मन्येव भासयेत् तथाभासमानानामपि भावानां कथं स एवात्मा इत्येतत्सर्वं विप्रतिषिद्धमालक्ष्यते इति एवं शङ्कमानानां प्रतिपत्तॄणां शङ्कां निरसितुं परमार्थश्चर्च्यते ॥

तत्र चिदात्मनि महेश्वरे सर्वोऽयं लोकव्यवहारो विश्रान्त इत्येतावत्कथं प्रत्येयतामियादित्याशंक्याह—

अर्केन्दुदीपाद्यवभासभिन्नं
नाभात्यतिव्याप्ततया ततश्च ।
प्रकाशरूपं तदियत्प्रकाश्य
प्रकाशताख्या व्यवहार एव ॥१॥

इह तावद्घटादिरर्थः संविदो भिन्नत्वेन प्रकाशयितु न शक्नुयात संविदात्मत्वे तथा सोऽवभासेत । यद्यर्था—

नामर्थरूपत्वमेव प्रघाशमानत्वं नान्यत् तद्व्यतिरिक्तं तज्ज्ञा नोदयात्प्रागिव ज्ञानोदयेऽपि न ज्ञायेत, स्वात्मन्यपि वा सोऽर्थो न व्यवस्थाप्येत अन्तरेण संवित्प्रकाशप्रसादं तद्व्यवस्थाया अनुपपत्तेरिति सर्वव्यवहार उच्छिद्येत । वेद्यधर्मत्वेऽपि प्रकाशस्य प्रमातृधर्मत्वं दुरुपपादं समर्थयितुं बीजाङ्कुरवत्प्रमातुरर्थरूपप्रकाशस्य कारणत्वे लब्धार्थाकारप्रकाशतायां तदनपेक्षणात् प्रमातृलग्नता नोपपत्त्या घटते । तस्मात्प्राग्वद् दोषः प्रसज्येत । अर्थाद्भिन्नस्य प्रकाशस्य तत्सम्बन्धिता च कथं युज्येत स स्वयमप्रकाशात्मतया अप्राप्तस्वात्मलाभः कथं परं संबध्नीयात् सर्वथार्थतत्संविदोर्भिन्नतायां मुक्तदोषप्रसक्तेः । तस्मादिदं सिध्यति यद्घटादेः स्वरूपं संविदभिन्नत्वमिति । अतो विश्वमिदं भावजातं संवित्प्रकाशलग्नमेव तदनधिकवृत्ति अवभासते । मायाप्रमातुः करणानुग्राहकोऽर्कादिप्रकाशोऽपि जडभावराशिसादृश्यात् पृथग्भातुं नालं संविदमवलम्ब्यैव तत्प्रकाशनात् । सर्वव्यापकत्वान्न केवलं भावमेवावभासन्ती संविद्यावत्सदा असंभाव्यमानसत्ताकस्य खपुष्पादेरभावस्यापि जीवितप्रदत्वाद्विषयतां विधत्ते इत्याशयेनोक्तं 'अर्केन्द्वित्यादि'। ततश्च संविदात्मकचित्प्रकाशमाश्रित्यैव भासमानं तदर्कादि चित्प्रकाशात्मकं न ततो मनाङ्मात्रं भिद्यते । कथं तर्हि ग्राह्यग्राहकात्मा व्यवहार इत्यत आह - येयं चिदात्मनो मायाशक्त्या परस्परं वेद्या वेदकाश्च, वेदकाश्चान्यन्यं

वेद्याश्च इयन्तोऽसंख्या विभेदिताः तद्भावाख्यो, स संवृतिसत्यतया व्यवहार एव मायाप्रमात्रपेक्षया भेदैकप्राणो भासते । अविच्छिन्नप्रमातुः पुनः सर्वं स्वात्मकल्पतया महामन्त्रात्मकमेव चकास्तीति भावः ॥१॥

ननु तावदमी विश्वे भावाः संविदि विश्रान्ता भवन्तु कथं तदैकात्म्यं ते समापद्येरन्, कुतश्च व्यतिरिक्ततया भासमानाः संविदं न भेदयेयुरपि इत्याशंक्याह—

ज्ञानाद्विभिन्नो नहि कश्चिदर्थ—
स्तत्तत्कृतः संविदि नास्ति भेदः ।
स्वयं प्रकाशाच्छतमैकधाम्नि
प्रातिस्विकी नापि विभेदिता स्याम् ॥२॥

यतोऽर्थाः संविद्विश्रान्ता एव प्रकाशन्ते ततस्ते संविदो न विभिद्यन्ते, तेषां प्रकाशमानत्वमेव संविदभिन्नत्वं, संविदेव प्रकाशः संविन्माहात्म्यादेव मायीयप्रमातृभावकल्पनोन्मीलनायां भावाः संवित्प्रकाशादतिरिक्ता इव प्रकाशन्ते च, प्रकाशमानाश्च ते अनुज्झितसंवित्तादात्म्या अपि विच्छिन्नतया बहिरपि भान्ति । तस्मात्संवित्प्रकाशानतिरिक्तवृत्तय इति सिद्धम् । त्यक्तसंविदैकात्म्या हि प्रकाशाद्भिद्यमाना अप्रकाशतामापन्ना न कदाचिद् भासेरन् इति लोकव्यवहारः सर्वः क्रयविक्रयाद्यात्मा विनश्येत् । नच तथा, अतः प्रकाश एव स्वातन्त्र्येण तथातथा भाववैचित्र्येण प्रकाशते इत्याशयत उक्तम्—'ज्ञानाद्विभिन्नो नहि कश्चिदर्थः

इति । नन्वेव तथापि वेद्याः स्वमहिम्ना संविदं विभिन्दन्तु घटसंविदसौ पटसंविदियमित्यादिनेत्याशंक्याह– 'तत्तदिति' नच भावैः क्रियमाणः संविदि भेद उपपद्यते, भावा हि संविदो भिन्नत्वेनाप्रकाशमानाः स्वसत्तां नोपलभेरन् । कथं पुनः स्वजीवितस्थानीयां संविदं विभेत्तुमुद्युञ्जीरन्, अतस्ते संविदैकात्म्यभाजस्तदन्तर्मग्ना एव । यदि स्वात्मनि भिद्यमानत्वं सहेरन् तत्संविद्भेदिनः संभाव्येरन् । ते तु तत्कर्तुमसमर्था एव । अथ भावानां स्वसंवेदनेन क्रियमाणे भेदेऽभ्युपगम्यमाने स्फुटमन्योन्याश्रयदोषापातः । यावतः परस्परं भावतत्संवेदनयोर्वैविक्त्येन अवस्थित्यभावात् । मूर्तिक्रियावैचित्र्येणोद्भासितौ देशकालावपि वेद्यान्तर्गतौ प्रकाशैकात्म्यमुखप्रेक्षित्वात् कथंकारं प्रकाशं विभिन्ताम् । सर्वं भावजातं प्रकाशाभिन्नं प्रकाशमानत्वात् । नहि तद्भिन्नस्याप्रकाशरूपस्य प्रकाशमानत्वं युक्तं विप्रतिषिद्धत्वादिति बहुशः प्रोक्तम्, अतो देशाद्युपाधिरपि चित्प्रकाशाभिन्नं भावजातं न जातुचिद्विभिन्द्यात् इति वेद्यवत्कालादिरपि न प्रकाशस्य भेदकृत् । ननु मा वेद्या विभिन्दन् संविदस्तु संविदन्तरात् तद्भवेदेव भेद इत्याशंक्याह– 'स्वयमिति' । अस्यां संविदि प्रतिवस्तु संविदन्तरेण कृता विभेदिता न भवेत्, यतः प्रकाशैकरूपा संवित् तस्या घटादिसंविदन्तरमवलंब्य भेदव्यवहारे संवृतिबुद्ध्या स्वीक्रियमाणेऽपि एकतरस्याप्रकाशरूपत्वमापतेत् इत्यसंविद्रूपतया न किञ्चित् स्यात्, प्रकाशैकरूपतया अविभेदिनि तस्मिन्संविदेकमय-

त्वमेव, परिमितप्रमातृपदे तु मायाशक्त्या केवलं भिन्न-
तया भासमानोऽयं स्वरूपभेदो भवन्नपि प्ररोहं न याति
प्रकाशैकरूपत्वात् इति, तस्माद्विश्वं तावदिदं संविद्येव विश्रा-
न्तम् । ननु येयं संविन्मूर्धाभिषिक्ततया प्रधानीक्रियते सा
शान्तब्रह्मवदौदासीन्यमवलम्बमाना कथं विश्वमाभासयेत् कथं
च तद्विश्रान्तिस्थानं भवितुमर्हा इत्याशंक्यां विशेषणद्वारेणापा-
कुर्वन्नाह-स्वयं प्रकाशेति, सा हि संवित्स्वयं प्रकाशा परप्रका-
शमुखाधीनत्वाभावात् स्वप्रकाशा, स्वप्रकाशत्वमेवाजडत्वं
यन्माहात्म्याद्वेद्यवर्गं प्रकाशैक्यतया भासयन्ती स्वानन्दरस-
चमत्कारपूर्णतामेति इत्यतः सा सविमर्शा, विमर्शवैधुर्ये तु
जडत्वप्रसङ्गः स्वविश्रान्तिशून्या कथं परं विश्रामयितुं शक्नु-
यात् । अतः संविन्मयस्य परमेश्वरस्य विमर्श एव समवेतेच्छा-
शक्तिपर्यायो रुद्रक्षेत्रज्ञादीन् प्रमातृवर्गान् नीलसुखादि-
प्रमेयनिचयांश्चावभासयति तथा निर्भासितानपि तान् सं-
विन्मये प्रकाश एव विश्रान्तान्करोतीत्यर्थः । नन्वेवं स प्रका-
शो विश्वाधारत्वे सति विश्वस्माद्भिन्न एव कथं न भायादि-
त्याशंक्याह—'अच्छतमेति'। अच्छाच्छतरयोर्दर्पणस्फटिकयो-
रच्छतमत्वं नास्ति यतो दर्पणस्यैकपार्श्वप्रतिबिम्बितस्य स्फ-
टिकस्यापि सर्वतः संक्रान्तबिम्बस्य स्वं रूपमपि पृथक प्रथते
संवित्प्रकाशस्य तु एतदेवात्यन्तनैर्मल्यं यद्विश्वप्रतिबिम्बनिर्भा-
सनेऽपि स्वाकारस्यानवभासनं नचैवमनवभासने प्रकाशता-
मुज्झेत् इत्याह—'एकधाम्नीति' । मुख्यप्रकाशायामित्यर्थः ।

प्रकाशतात्यागे हि तृणमात्रस्यापि अप्रकाशमानत्वमापतेदिति भावः एवं सर्वे भावाः स्वात्मनि प्रकाशातिरिक्ते असत्कल्पाः अतः संवित्प्रकाश एव स्वतन्त्रः स्वेच्छयैव स्वान्तःस्थितान् विश्वान् भावानुन्मील्य बहिर्भासितानपि तानन्तःस्थानेवाभासयन् तत्तदात्मत्वेन स्फुरतीत्यर्थः ॥२॥

ननु भावा इमे वैचित्र्येण भासमानाः कथमपह्नूयेरन्–यावता तथावभासमानानां शिव एवात्मा इत्युक्तिं कः प्रतीयात् भावा हि भेदाभासनेन व्याप्ताः प्रकाशन्ते। शिवात्मकत्वं तु तेषां तद्विरोधिनैकरूपत्वेन व्याप्तं भाति, तस्मादिमे भावा युगपदेकात्मानोऽनेकात्मानश्च कथमित्याशंक्याह—

इत्थं स्वसंविद्घन एक एव
शिवः स विश्वस्य परः प्रकाशः।
तत्रापि भात्येव विचित्रशक्तौ
ग्राह्यग्रहीतृप्रविभागभेदः ॥३॥

इत्थं प्रकाशघनैकरूपायां संविदि अभिन्नवेद्यराशिना असंभाव्यमानभेदात्मना प्रकारेण स्वसंविद्घनः शिव एवैको मुख्यः सदाशिवादेर्भूमिपर्यन्तस्य स्वात्मकल्पस्य विश्वस्य प्रकाशस्तत्स्वरूपभूतः स एव हि नीलादिकमर्थजातमत्यक्तनीलादिभावमपि प्रकाशयन् प्रकाशाभेदमयतां प्रापयति, नीलादयो हि अत्यक्तस्वभावा एव चेत्यमानाः सन्तः संविदभेदमया एव। एतदेव संविद्घनात्मनः शिवस्य शिवत्वं यद्वैश्वरूप्येणावभासमानत्वेऽपि प्रकाशस्वभावादप्रच्यावः विश्वस्फुरणस्य

संविन्मरीचिकल्पत्वात् चित्कचनमयत्वम् चिद्व्यतिरिक्तस्य अप्रकाशमयतया न कदाचिद्भानं संभवेत्, अत एव सैन्धवघनवदन्तर्बहिः पूर्णतया एकैव संविदानन्दातिशयेनोच्छलन्ती विश्वं विस्फुरतीत्यर्थः । नन्वेवं शिवैकात्मत्वेऽपि कथमनेकात्मतया विश्वाभास इत्याशंक्याह—'तत्रापीति' । संवित्प्रकाशैकात्मत्वावभासेऽपि परमेश्वरस्य मुख्यां स्वस्वातन्त्र्यशक्तिमवलम्ब्य निमितीकृत्य च मन्त्रमहेश्वरादिप्रमात्रपेक्षया तदुचितप्रमेयभेदप्रभेदो विचित्रो भात्येव नच न भातीत्यर्थः । तस्यामेव मुख्यशक्तौ शक्त्यन्तराणामसंख्यानामन्तर्भावः । एतदेव स्वाच्छन्द्यं भगवतो यत्संविद्घनात्मक एव भवन् ग्रहीतृग्राह्यात्मना त्रिविधरूपेण संविद्रूपादनतिरिक्तेनापि तदतिरिक्ततया भासमानेन वपुषा प्रकाशते विमृशते चेति सहृदयसंचेत्यमिदम् मन्त्रमहेश्वरादीनां प्रमेयभेदः श्रीतन्त्रालोकादिषु निर्णीतस्तत एव विवेच्यः, विस्तरभिया नेह वितन्यते । तदेवं युगपद्भावानामनेकधा भासमानानामेकात्मत्वमनेकात्मत्वं चान्तर्बहिः स्वातन्त्र्यशक्तिवशाद्घटते । तथा वैचित्र्याभासेऽपि पूर्णाहमकृत्रिमपरामर्शचमत्कारसारतया अभेदभूम्यवलम्बनं विजृम्भमानमेवेति ॥३॥

ननु विश्वमिदमीश्वरेच्छयैव यदि बहिरवभास्यते तदानीमेव स्वात्मन्येव भास्यत इति विरुद्धमेतदुपलक्ष्यते, तथा हि स्वात्मनाविभेदेन भासमानस्यार्थस्य बहिर्निभासनं विरुध्यते नहि कश्चिदर्थोऽन्तर्भासमानस्तदानीमेव बहिर्भूतश्च भासि-

तुमुपपद्यते घट इव गृहान्तर्भूतश्चेति किमेतदित्याशं-
क्याह—

भेदः स चायं न ततो विभिन्नः
स्वच्छन्दसुस्वच्छतमैकधाम्नः ।
प्रासादहस्त्यश्वपयोदसिन्धु-
गिर्यादिवद्दर्पणादेः ॥४॥

सोऽयं प्रमातृप्रमेयादीनां भेदोपभेदवैचित्र्योन्मीलनात्मा भेदोऽपि ततो बोधात्मनो भैरवस्वरूपाद्विभिन्नो नास्ति, भेदप्रकाशनमपि संविदन्तःस्थितमेव बहिरपि तत्स्वातन्त्र्याद् घटते मनागपि ततो भिन्नत्वेन परित्यक्तसंविद्भेदं न स्फुरितुमुत्सहते । ननु भासते च विश्वमिदं संविदेकात्मकं चेति कथं संगच्छतामित्याशंकापासनाय विशिनष्टि— 'स्वच्छन्देति' । इदमेव स्वाच्छन्द्यमप्रतिहतेच्छत्वं यद्भिन्नतया भासमानत्वेऽपि वस्तुतोऽभेदात्मना स्वात्मनोऽनधिकवृत्त्या निर्भासनम् । सेयं भगवतः पराशक्तिर्यया प्रकाशपरमार्था निखिला भावाः पूर्णाहंविमर्शसारतया संविन्मयस्वात्मरूपा आभासन्ते । नन्वेवं स्वात्मानधिकवृत्त्या भान्तोऽपि भावाः कथमाधिक्येनेव प्रकाशन्त इत्यत आह— 'सुस्वच्छतमेति' । अत्यन्तनिर्मलादित्यर्थः । तत एवानधिकमपि विश्वमधिकमिव भाति सुस्वच्छतमत्वस्यैवेदं माहात्म्यं, वस्तुतो विश्वं नाम न किञ्चिद्भिन्नं वस्तु, न कदाचित्सृष्टं सृज्यते

संह्रियते वा केवलं स्वैश्वर्यातिशयतः शिव एव तथा तथाऽऽभासपरमार्थेन स्वेच्छोद्भासितवेद्यवर्गेण परितो विजृम्भमाणः स्वात्मानमानन्दरसनिर्भरं रसयतीति भावः, तथा 'एक धाम्न इति' सर्वविश्रान्तिस्थानत्वादनुपचरितप्रतिष्ठात्मन इत्यर्थः। एतदेव दृष्टान्तद्वारा हृदयङ्गमीकरोति यथा मणिदर्पणादेः स्वच्छवस्तुनः सकाशात्प्रसादादयस्तद्गताश्च अवयवावयवविभावाधाराधेयभावप्रभृतयः सर्वे व्यवहारा विचित्रा मनाङ्मात्रमपि ततो न भिन्ना अविद्यमानप्रातिस्विकस्वरूपाधिक्या अपि परस्परस्वरूपवैचित्र्यवैविक्त्येन तदधिकेनेवाभासन्ते इति। स्वच्छत्वमेतदेव दर्पणादेर्यत् भिन्नदेशकालाद्युपहितं ग्रामनदीपर्वतादिकं बिम्बाभिमतं स्वात्मनि प्रतिबिम्बितत्वेऽपि स्वरूपमतिरोधाय तथात्वेन दर्शयितुं योग्यतया प्रतिबिम्बग्रहणसहिष्णुत्वमिति ॥४॥

ननु दर्पणादेः प्रतिबिम्बावभासित्वे व्यतिरिक्तस्य प्राक्सिद्धस्य बिम्बस्यापेक्षा अवश्यंभाविनी, विना बिम्बं प्रतिबिम्बं दर्शयितुमसमर्थत्वादेवं चिदात्मापि स्वस्मिन् प्रतिबिम्बरूपं विश्वमाभासयन् नूनं स्वस्माद्भिन्नमेव प्रतिबिम्बार्पकं बिम्बमपेक्षेतेति, कतमत्तद्बिम्बं प्राग्लब्धसत्ताकं प्रमाणसिद्धं स्यादिशंक्याह—

आदर्शकुक्षौ प्रतिबिम्बकारि
समर्पकं स्याद्यदि मानसिद्धम्।

सुस्वच्छसंविन्मुकुरान्तराले
भावेषु हेत्वन्तरमस्ति नान्यत् ॥५॥

यदि प्रत्यक्षादिना प्रमाणेन निर्मले दर्पणेऽन्तः-हस्त्यश्वपुरुषनदीनगरादीनां प्रतिफलिताभासानां प्रतिबिम्ब-करणहेतुः बाह्यं वस्तु समर्पकं प्रति बिम्बं ददत् बिम्बं सर्वत्र सर्वैः प्रमातृभिः परिदृश्यते, तथापि अत्यन्तनिर्मले संविद्दर्पणमध्ये विमर्शस्वातन्त्र्ययोगिनि भावेषु प्रति-बिम्बायमानेषु नास्ति पृथङ्निमित्तान्तरं प्रतिबिम्बार्पकं कारणं यद्वशाज्जगन्निर्भास्येत । विनैव बिम्बादिहेत्वन्तरं स्वविमर्शबलयोगात् स्वच्छन्दः संविन्मयो भगवान् स्वात्मन्येव स्वेच्छयैव विश्वमुन्मीलयतीति रहस्यार्थः । नतु द्वैतनय इव परमाणुकर्मादि जगदुत्पादे भिन्ननिमित्तादि-कमन्वेष्यम् । शान्तब्रह्मवादिवन्मलमायादि परिकल्प्यम्, एतदेव संविन्मुकुरस्य जडबाह्यदर्पणाद्वैलक्षण्यमजडत्वापादकं स्वाच्छ्यं नाम यत् तथातथा भासमानमात्मानं विमृशन्नेवातिरिक्तत्वानुभयात्मनापि स्ववपुषा सर्वदा भात्येव, दर्पणस्तु तथात्वविमर्शशून्यत्वाज्जड एवेत्यतः प्रथमानमपि जगन्न बहिः सृष्टमन्तःस्थमेव चिद्धृदयायमानं सारं पूर्णतामावहतीति भावः ॥५॥

ननु परमेश्वरस्य स्वात्मन्यभेदेनान्तःस्थितं वेद्यवेदक-भावजातं बहिर्विसृष्टुमवभासयितुं च किमितीच्छा जायते, चेत् जायते किं सप्रयोजनं निष्प्रयोजनं वा । नाद्यः

नित्यतृप्तस्य निराकांक्षत्वात्, द्वितीये पुनरिच्छोत्पादाभ्युपगमे सदैव बहिर्जगदवभासनं स्यात् न कदाचिद्वा तत्रापि विवर्तादिरूपं विश्वं प्रतिभासेतेत्याशंक्याह—

संविद्घनस्तेन परस्त्वमेव
त्वय्येव विश्वानि चकासति द्राक् ।
स्फुरन्ति च त्वन्महसः प्रभावात्
त्वमेव चैषां परमेश कर्ता ॥६॥

तेन सविमर्शतालक्षणेन हेतुना हे परमेश ! त्वमेवान्तर्बहिः स्वात्ममयेन विश्वेन परः पूर्णः संविद्घनः असंविद्रूपस्य व्यतिरिक्तस्याभावादित्यतस्त्वत्तो बहिर्न किञ्चिद्विसृज्यते दृष्टप्रत्ययोऽयं यत्स्वप्नसंकल्पनिर्माणादौ स्वसंविद एव निरतिशयैश्वर्यवशादुपादानादिसामग्र्यपेक्षाविहीनमेव तत्तदपरिमेयानां अन्तर्व्यवस्थितभावराशीनां बहिष्क्रियायां विजृम्भमाणायामनतिरेकितयावलोकनमिति न किमपि स्वतन्त्रे भगवति अप्रत्ये' प्रत्युत स्वानुभवबाह्यस्य कल्पनमेवाविश्वास्यमिति सहृदयवेद्यम् । स्वतन्त्रत्वादेव निष्कारणं जगत्सिसृक्षायां नित्यप्रवृत्तो महेश्वरः सदैव पञ्चकृत्यकरणशीलः, तस्याप्रतिहतेच्छस्य स्वाच्छन्द्यं न केनापि निरोद्धुं शक्यं प्रतिक्षेप्तुं वा । स स्वेच्छयैव स्वरूपगोपनात्मिकां क्रीडामुज्जिलासयिषुः संविन्मयानेव वेद्यवेदकात्मभावराशीन् प्रति कृत्यानि करोति । मायाप्रमातृभावग्रहणेनापि जगन्नाट्यावभासनकारी

पुनरपि निष्कारणमेव स्वात्मानं स्वशक्तिवीर्यप्रथनेन विगतबन्धनं विधत्ते । नच बन्धने मायाद्यावरणं निमित्तं कल्प्यम्, तदावरणे तस्य स्वनाशापत्तेः । स्वशक्तिविकासाख्ये बन्धनध्वंसेऽपि शक्तिपातं विना अन्यस्य वैराग्यादेः कारणान्तरस्य अनवस्थापातादिदोषादित्यतः पञ्चानां कृत्यानामुपलक्षणं तावत्सृष्टिस्थिती आह— 'विश्वानि चकासतीति' । त्वय्येव संविद्घने विश्वानि रूपाद्यात्मकानि जगन्ति द्रागक्रममेव चकासति तवैव ज्ञानक्रियात्मनो महसः प्रभावादैश्वर्यात् स्फुरन्ति च, चकारात् त्वय्येव लीयन्ते अर्थात्संविद एवोदेत्य तत्रैव प्रतिबिम्बितं तदभिन्नप्रकाशात्मकं विश्वं स्वात्ममयमेवेत्यर्थः । अत एवैषां जगतां त्वमेव कर्ता, एतदेव कर्तृत्वं यदलौकिककार्यकारणभावेन उपादानादिकारणं विना विश्ववैचित्र्यावभासनं, तदन्येषां नियतिशक्तिनियन्त्रितानां मायातत्त्वावस्थितानां ब्रह्मविष्ण्वादीनां नियतस्वस्वकृत्यानामसंभाव्यमेव । अत एव जगत्सर्जने मायाप्रकृत्यादेः कारणाभिमतस्य चित्स्वरूपाद् भेदाभेदविकल्पैरुपहतत्वात् कारणत्वं नोपपद्यते अतो विवर्तादिमयं जगन्न भवेत् । यदाहुराचार्याभिनवगुप्तपादाः—'विवर्तो ह्यसत्यरूपनिर्भासात्मा' इत्युक्तं, निर्भासते चासत्यं चेति कथं इति तु न चिन्तितम् । परिणामे तु रूपान्तरं तिरोभवति

रूपान्तरं च प्रादुर्भवति इत्युक्तम् । प्रकाशस्य तु रूपान्तराभावात् तत्तिरोधाने स्यादान्ध्यम् अप्रकाशश्च प्रादुर्भवन्नैव प्रकाशेत इत्युभयथापि सुप्तं जगत्स्यादिति न पर्यालोचितम् । प्रतिबिम्बवादे च स्वच्छतामात्रं संवेदनस्य न स्वातन्त्र्यमिति तत्समर्पकवस्त्वन्तरपर्येषणा कर्त्तव्या । अविद्याख्यानिर्वाच्या वैचित्र्यं चाधत्ते इति व्याहृतम् । पारमेश्वरी शक्तिरेवेयमिति तु हृदयावर्जकः क्रमः । तस्मादनपह्नवीयः प्रकाशविमर्शात्मा संवित्स्वभावः परमशिवो भगवान् स्वातन्त्र्यादेव रुद्रादिस्थावरान्तप्रमातृरूपतया नीलसुखादि प्रमेयरूपतया च अनतिरिक्तयाप्यतिरिक्तयेव स्वरूपानाच्छादिकया संविद्रूपानान्तरीयकस्वातन्त्र्यमहिम्ना प्रकाशते इत्ययं स्वातन्त्र्यवादः प्रोन्मीलित इति ॥६॥

एवमुक्तरूपमेव स्वात्मानं मायाप्रमातृताप्रह्वीभावेन समुत्कर्षयन्नुपसंहरति —

इत्थं स्वसंवेदनमादिसिद्ध-
मसाध्यमात्मानमनीशमीशम् ।
स्वशक्तिसंपूर्णमदेशकालं
नित्यं विभुं भैरवनाथमीडे ॥७॥

इत्थमुक्तप्रकारं स्वमात्मानं स्वसंवेदनं स्वप्रकाशमीडे तत्प्रवणतया देहादिप्रमातृताभिमाननिमज्जनेन

न्मग्नसंविद्घनस्वरूपे समाविशामीत्यर्थः । ननु एतादृगात्मा केन प्रमाणेन ज्ञातुं शक्य इत्याशंक्याह– 'आदिसिद्धमिति' । सर्वेषां प्रमाणानां जीवितकल्पत्वान्न तत्र पूर्वसिद्धे परमेश्वरे प्रमाणोपयोगः । नच तार्किकादय ईश्वरसिद्धिं कुर्वन्तोऽपि साधयितुं शक्नुयुः, नित्यानवच्छिन्नप्रकाशस्वभावे तत्र उत्पादज्ञप्तिव्यापारानुपपत्तेः । प्रमातापि देहादिः स्वयं जडः कथमजडं प्रतिष्ठापयेत् । संविन्मात्रोऽपि स्वातन्त्र्यवैकल्याज्जडप्राय एव । नचेश्वरं निषेद्धुं कश्चिच्छक्नुयात् निषेद्धुरपि स्वयं तत्स्वभावत्वात् प्रत्युत स्वाभावं व्याहरतः स्ववचनविरुद्धं स्वसत्त्वमेव ज्ञाप्येत इत्याशयतोऽसाध्यमित्युक्तम् । ननु प्रसिद्धा एव ब्रह्माद्या ईश्वराः कथमप्रसिद्धमीश्वरमात्थेत्याशंक्याह– 'अनीशमिति' ईश्वरान्तरानधीनमत एव ईशं स्वतन्त्रं ज्ञातृकर्तृत्वैश्वर्यशालिनम् । ब्रह्माद्यास्त्वधरभूमिस्थास्तदीयैश्वर्यकणैरीश्वरीभूताः अस्वतन्त्रा एवेत्यर्थः । 'आत्मानमिति' ननु परं स्वया समवेतया विश्वशक्तिक्रोडीकारिण्या मुख्यया स्वातन्त्र्यशक्त्या संपूर्णं अत एव देशकालयोस्तन्निर्भासितयोरपि प्रागुक्तयुक्त्या संवित्प्रकाशाधीनजीवितत्वात् संविदं विभेत्तुमशक्यत्वात् तत्कलनाविहीनमत एव 'नित्यं' । कालकलनारहितत्वाद् देशाद्यपरिच्छिन्नत्वेन 'विभुं' । भरणरवणवमनस्वभावत्वात्

भैरवरूपं नाथं स्वामिनं विश्वभरितपूर्णाहन्ताचमत्कारशालिनं शिवस्वरूपमित्यर्थः । एवमस्य प्रकरणस्य तात्पर्यार्थः, यस्मात्संविद्घनात्स्वात्मन इदं विश्वमुदेति तत्र विश्रान्तं प्रतिबिम्बकल्पतया यदिच्छयैवावभासते । यश्च तस्य प्रकाशमानस्यात्मा तेनानावृतो यत् स्वातन्त्र्याद्यत्र चानधिकत्वेऽप्यधिकमिवेदं भाति स एव परमार्थस्वभावोऽनुत्तरप्रकाशात्मा शिवोऽहमस्मि पूर्ण इति एवं शांभवोपायेन सहृदयाश्चिन्वन्तु स्वात्मानमिति ॥७॥

एवमुक्तप्रकारायाः परमार्थचर्चाया अनवरतपरामर्शनेन परशक्त्यनुगृहीताः स्वात्मपरमार्थमयीं त्रिजगतीं पश्यन्तो भैरवधाम्नि नित्यसमाविष्टाः स्युरित्यव्यवहितां सद्यः फलप्राप्तिं स्वसंविदितामावेदयन्नाह—

सद्वृत्तसप्तकमिदं गलितान्यचिन्ताः
सम्यक्स्मरन्ति हृदये परमार्थकामाः ।
ते भैरवीयपरधाम मुहुर्विशन्ति
जानन्ति च त्रिजगतीं परमार्थचर्चाम् ॥८॥

स्पष्टम् ॥८॥

इति श्रीमहामाहेश्वर-श्रीमदाचार्याभिनवगुप्तपाद-विरचितायाः परमार्थचर्चायाः पं० हरभट्टशास्त्रिकृतं विवरणं समाप्तम् ॥

श्रीमताभिनवेनेमां रचितां पारमार्थिकीम् ।
चर्चां स्वात्मसमावेशदायिनीं व्यवृणोद्धरः ॥

श्रीशिवार्पणमस्तु ॥



